# || श्रीसिद्धलक्ष्मीगणपतिस्तोत्रम् ||

श्री गणेशाय नमः

*ध्यानम्*

हरतु कुलगणेशो विघ्नसङ्घानशेषान्, नयतु कुलसपर्यां पूर्णतां साधकानाम् ।
पिबतु बटुकनाथश्शोणितं निन्दकानाम्, दिशतु सकलकामान् कौलिकानां गणेशः

श्रीसिद्धलक्ष्मीगणेशाभ्यां नमः

ॐ अस्य श्रीसिद्धलक्ष्मीगणपतिस्तोत्रमालामंत्रस्य गणकऋषि गायत्रीछन्दः
लक्ष्मीगणपतिर्देवता ॐ गं बीजं ह्रीं शक्ति : क्लीं कीलकं मम सर्व
मनोरथसिद्ध्यर्थे श्रीसिद्धलक्ष्मीगणपतिप्रीत्यर्थे जपे विनियोगः

न्यासः

ॐ गं अंगुष्ठाभ्यां नमः
ॐ ह्रीं तर्जनीभ्यां नमः
ॐ क्लीं मध्यमाभ्यां नमः
ॐ गं अनामिकाभ्यां नमः
ॐ ह्रीं कनिष्ठिकाभ्यां नमः
ॐ क्लीं करतलकर पृष्ठाभ्यां नमः ।

इति करन्यासः

ॐ गं हृदयायनमः
ॐ ह्रीं शिरसे स्वाहा

ॐ क्लीं शिखायै वषट्
ॐ गं कवचाय हुं
ॐ ह्रीं नेत्रत्रयाय वौषट्
ॐ अस्त्राय फट् ।
इति हृदयादि न्यासः ।।

|| ध्यानम् ।।

विघ्नेशं परमं परात्परतरं सिन्दूरसर्वाङ्किकतम्
मुक्ताविद्रुमहेमभूषणयुतं मन्दारमालार्चितम्
आनन्दं च मनोहरं शुभकरं पाशाङ्कुशैः शोभितम्
ध्यायेद् विघ्नविनाशनं सुखकरं गौरीसुतं तं नमः ।।

|| अथ स्तोत्रम् ।।

ॐ ॐ ॐकाररूपं अहमिति च परं यत्स्वरूपं तुरीयम्
वैगुण्यातीतलीलं कलयति मनसस्तेजसा रूपवृत्तिम्
योगीन्द्रा ब्रह्मरन्ध्रे सकलगुणमयं श्रीहरेन्द्रेण सङ्गम्,
गं गं गं गं गणेशं गजमुखमभितो व्यापकं चिन्तयन्ति ।।१।।

वं वं वं विघ्नराजं भजति निजमुखे दक्षिणे न्यस्तशुण्डम्,
कौं क्रौं क्रौं क्रोध मुद्रा दलितरिपुबलं कल्पवृक्षस्यमूले
दं दं दं दन्तमेकं दधति मुनिमुखं कामधेन्वानिषेव्यम्,
धं धं धं धारयन्तं धनदमतिमयं सिद्धिबुद्धिद्वितीयम् ॥२||

तुं तुं तुं तुङ्गरूपं गगनपथिगतं व्याप्तरूपं दिगन्तम्,
क्लीं क्लीं क्लीं कामनाथं प्रणवमिति महामंत्रमुक्तावलीनाम्

ह्रीं ह्रीं ह्रींकारमाद्यं सहज गुणमयं योगिनां ध्यानगम्यम्,
श्रीं श्रीं श्रीं शंकरं तं निखिलनिधिकरं नौमि हेरम्बबिम्बम् ।।३।।

ग्लौं ग्लौं ग्लौंकारमाद्यं प्रणवयुतमहामन्त्रमुक्तावलीनाम्,
शुद्धं विघ्नेशबीजं शशिकरसदृशं योगिनां ध्यानगम्यम्
डां डां डां डामरूपं दलितभवभयं कोटिसूर्यप्रकाशम्,
यं यं यं यज्ञनाथं जपति मुनिगणो बाह्यमाभ्यंतरं च ।।४।।

हुँ हुँ हुँ हेमवर्ण श्रुतिगणितगुणं शूर्पकर्ण विशालम्
ध्येयं सूर्यस्य बिम्बे सरसि च विलसत् सर्पयज्ञोपवीतम्
स्वाहा हुँफट् नमोन्तैः ठ-ठ-ठ-सहितैः पल्लवैः सेव्यमानम्,
मन्त्राणां सप्तकोटिप्रगुणितमहिमाधारमीशं प्रपद्ये ।।५।।

पूर्वपीठं त्रिकोणं तदुपरि रुचिरं षट्कपत्रं पवित्रम्,
तस्योर्ध्व शुद्धरेखा वसुदलकमलं बाह्यतेजश्चतस्त्रम्
मध्ये हुँकारबीजं तदनुभगवतश्चाङ्गषट्कं षडंशे,
अष्टौ शक्तीश्च सिद्धीर्बटुकगणपतिर्विष्टरश्चाचाष्टकं च ।।६।।

धर्माद्यष्टौ प्रसिद्धान् दशदिशि विदिशान् बाह्यतो लोकपालान्,
तस्य क्षेत्रादिनाथं मुनिकुलमखिलं यन्त्रमुद्रोपदेशम्
एवं यो भक्तियुक्तो भजति गणपतिं पुष्पधूपाक्षताद्यैर्-
नैवेद्यैर्मोदकानां स्तुतियुतविलसद्गीतवाद्यैश्च नृत्यैः ।।७

राजानः सर्ववश्या युवतिजनसदा दासवत् सर्वदास्ते,
लक्ष्मीः सर्वाङ्गयुक्ता भजति च सदनं किङ्कराः सर्वलोकाः
पुत्राः पौत्रा प्रपौत्राः रणभुवि विजयी द्यूतवादे विवादे,
यस्यासौ वक्रतुण्डो वसति च हृदये भक्तिभाजो गणेशः ।।८।।

गणेशस्तोत्रमिदं पुण्यं प्रातरुत्थाय यः पठेत् ।
तस्य सर्वाणि कार्याणि सिद्धिं यान्ति ह्यसंशयम् ॥९॥ ॥

इति श्रीजगद्गुरुशङ्कराचार्यविरचितं सिद्धलक्ष्मीगणपतिस्तोत्रं समाप्तम्